नादो विष्ण्वात्मना, विष्णुः व्याप्यव्यापककलनापह्नवसिद्धं ब्रह्ममयं रूपं निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इत्यादिकलना यया क्रियते सेयं क्रियाशक्तिरित्यभिधीयत इत्यर्थः ॥ ३३ ॥

साक्षाच्छक्तिस्वरूपम्

साक्षाच्छक्तिर्भगवतः स्मरणमात्ररूपाऽऽविर्भावप्रादुर्भावात्मिका निग्रहानुग्रहरूपा शन्तितेजोरूपा [1]व्यक्ताव्यक्तकारणचरणसमग्रावयवमुख[2]वर्णभेदाभेदरूपा भगवत्सहचारिणी अनपायिनी अनवरतसहाश्रयिणी उदितानुदिताकारा निमेषोन्मेषसृष्टिस्थितिसंहारतिरोधानानुग्रहादिसर्वशक्तिसामर्थ्यात् साक्षाच्छक्तिरिति गीयते ॥ ३४ ॥

साक्षाच्छक्तिस्वरूपमाह—साक्षादिति । ब्रह्मसाक्षात्कारवृत्तिर्ज्ञानं तद्गोचरा चिच्च साक्षाच्छक्तिः सेयं भगवद्रूपाऽपि भगवतः स्मरणमात्रेण स्वाज्ञदृष्ट्या आविर्भावतिरोभावनिग्रहानुग्रहतत्कलनाशान्तितेजोरूपा व्यक्ताव्यक्तप्रपञ्चकारणीभूतचरणादिसमग्रावयवसंपन्ना स्वाज्ञदृष्ट्या भगवतो भेदाभेदरूपा भगवत्सहचारिणी सृष्ट्यादिपञ्चकृत्यकरणसमर्था सैव साक्षाच्छक्तिरित्यर्थः ॥ ३४ ॥

योगशक्तिरूपेच्छाशक्तिः

इच्छाशक्तिस्त्रिविधा । प्रलयावस्थायां विश्रमणार्थं भगवतो दक्षिणवक्षःस्थले श्रीवत्साकृतिर्भूत्वा विश्रम्यतीति [3]सा योगशक्तिः॥३५॥

[1] व्यक्तोव्य—अ १, अ २, क.

[2] वर्णाभे—उ १.

[3] स्वयो—उ, उ १. स्वायोक—अ, अ १, अ २.

पुनर्योगभोगवीरशक्तिभेदेनेच्छाशक्तिस्त्रिविधा । तत्र योगशक्तिस्वरूपमाह—**प्रलयेति** । **स्वविश्रमणार्थम्** । स्वयं श्रीवत्साकृतिः ॥ ३९ ॥

भोगशक्तिरूपेच्छाशक्तिः

भोगशक्तिर्भोगरूपा कल्पवृक्षकामधेनुचिन्तामणिशङ्खपद्मनिध्यादिनवनिधिसमाश्रिता भगवदुपासकानां कामनया अकामनया वा भक्तियुक्ता नरं नित्यनैमित्तिककर्मभिरग्निहोत्रादिभिर्वा यम[1]नियमासनप्राणायामप्रत्या[2]हारधारणाध्यानसमाधिभिर्वा [3]गोपुरप्राकारादिभिर्विमाना[4]दिभिः सह भगवद्विग्रहार्चापूजोपकरणैरर्चनैः स्नानादिभिर्वा पितृपूजा[5]दिभिरन्नपानादिभिर्वा भगवत्प्रीत्यर्थमुक्त्वा सर्वं क्रियते ॥ ३६ ॥

तत्र भोगशक्तिस्वरूपमाह—**भोगेति** । **भोगरूपा** किमाश्रिता सतीत्यत्र—**कल्पेति** । **पद्मनिध्यादिनवनिधिसमाश्रिता** सती भगवतो भोगयोग्या भवति । न केवलं भगवतः, किंतु तद्भक्तानामपीत्याह—**भगवदिति** । **ध्यानसमाधिभिर्वा** संयोज्य तत्तत्फलभोगिनं करोतीत्यर्थः । यस्तादृशाधिकारी न भवति तं **गोपुरेति** । क्षुत्तृष्णावत्प्राणिजातस्य तत्तदुचितान्नपानादिदापनशक्तिभिर्वा संयोज्य तत्तत्फलभोगभोगिनं करोति । किमर्थमनयैवं क्रियत इत्यत्र, एवं भगवद्भक्ततोषणं **भगवत्प्रीत्यर्थं** इत्युक्त्वा पूर्वोक्तं सर्वं अनया भोगशक्त्या क्रियते, न हि कार्यान्तरमुद्दिश्येत्यर्थः ॥ ३६ ॥

[1] नियमप्रा—अ १, उ, उ १,
[2] हारध्यान—उ, उ १.
[3] लमनण्वपि गो—अ १, अ २, क, मु.
[4] दिभिर्वा भ—अ १. दिभिर्वा सह भ—अ.
[5] दिभिर्वान्न—अ १.

वीरशक्तिरूपेच्छाशक्तिः

अथातो वीरशक्तिश्चतुर्भुजाऽभयवरदपद्मधरा किरीटाभरणयुता सर्वदेवैः परिवृता कल्पतरुमूले चतुर्भिर्गजै रत्नघटैरमृतजलैरभिषिच्यमाना सर्वदेवतैर्ब्रह्मादिभिर्वन्द्यमाना अणिमाद्यष्टैश्वर्ययुता [1]संमुखे कामधेनुना स्तूयमाना वेदशास्त्रादिभिः स्तूयमाना जयाद्यप्सरस्त्रीभिः परिचर्यमाणा आदित्यसोमाभ्यां दीपाभिः [2]प्रकाशिष्यमाणा तुम्बुरुनारदादिभिर्गीयमाना राकासिनीवालीभ्यां छत्रेण ह्लादिनीमयाभ्यां चामरेण स्वाहास्वधाभ्यां व्यजनेन भृगुपुण्यादिभिरभ्यर्च्यमाना देवी दिव्यसिंहासने पद्मासनारूढा सकलकारणकार्यकरी लक्ष्मीर्देवस्य पृथग्भवनकल्पनालंचकार स्थिरा प्रसन्नलोचना सर्वदेवतैः पूज्यमाना वीरलक्ष्मीरिति विज्ञायत इत्युपनिषत् ॥ ३७ ॥

वीरलक्ष्मीस्वरूपमाह—**अथेति** । अनर्घ**किरीटाभरणयुता** जयजयेति **अप्सरस्त्रीभिः** अप्सरोभिः **परिचर्यमाणा** । **दीपाभिः** स्वतेजसा दीपभावमापन्नाभ्यां दीपाभ्याम् । **राकासिनीवालिभ्यां** पूर्णिमाऽमावास्याभ्याम् । **छत्रेण ह्लादिनीमयाभ्यां चामरे** छत्रचामरहस्ताभ्यामित्यर्थः । **व्यजनेन** व्यजनहस्ताभ्यां वीज्यमानेत्यर्थः । **भृगुपुण्यादिभिः अभ्यर्च्यमाना** भृगोस्तपःफलरूपत्वात् । **पृथग्भवनकल्पनाभिः अलंचकारेव** स्थिता । यदकार्यमकारणं चिन्मात्रं तस्य मिथ्यास्वाविद्याद्वयसंबन्धतः कार्यकारणोपाधिकजीवत्वमीश्वरत्वं च करोतीति कार्यकारणत्वकरीत्यत्र "जीवेशावाभासेन करोति" इति श्रुतेः । स्वाज्ञदृष्ट्या **लक्ष्मीः** । **यैवं सर्वदेवतैः पूज्यमाना** सेयम् । सा सीतेत्यारभ्य

[1] सन्मुखे—अ १, अ २, क.

[2] प्रकाश्यमाना—मु.

वीरलक्ष्मीरिति विज्ञायते इत्यन्तग्रन्थप्रतिपाद्या चिच्छक्तिः सीता चित्सामान्यरूपत्वात्। सीतातत्त्वं तु शक्तित्रयापह्नवसिद्धं चिन्मात्रमित्यर्थः। इत्युपनिषच्छब्दः सीतोपनिषत्समाप्त्यर्थः ॥ ३७ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
लिखितं स्याद्विवरणं सीतोपनिषदः स्फुटम्।
सीतोपनिषदो व्याख्याग्रन्थस्तु द्विशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चचत्वारिंशत्सङ्ख्यापूरकं
सीतोपनिषद्विवरणं संपूर्णम्

# सौभाग्यलक्ष्म्युपनिषत्

वाङ् मे मनसि—इति शान्तिः

## प्रथमः खण्डः

सौभाग्यलक्ष्मीविद्याजिज्ञासा

अथ भगवन्तं देवा ऊचुर्हे भगवन्नः कथय सौभाग्यलक्ष्मीविद्याम् ॥ १ ॥

सौभाग्यकैवल्यलक्ष्मीविद्यावेद्यसुखाकृति ।
त्रिपान्नारायणानन्दरामचन्द्रपदं भजे ॥

इह खलु ऋग्वेदप्रविभक्तेयं सौभाग्यलक्ष्म्युपनिषत् श्रीसूक्तवैभवैकाक्षरादिश्रीदेवीमन्त्रग्रामयन्त्रनवचक्रविवेकादियोगसाम्राज्यप्रकटनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः संक्षेपतो विवरणमारभ्यते । देवतापटलनारायणप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—अथेति । किमिति—हे भगवन्निति ॥ १ ॥

सौभाग्यलक्ष्मीध्यानम्

तथेत्यवोचद्भगवानादिनारायणः सर्वे देवा यूयं सावधान[1]मना भूत्वा श्रृणुत । तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां

[1] मनसो—मु.

पीठोपपीठदेवतापरिवृतां चतुर्भुजां श्रियं हिरण्यवर्णामिति पञ्चद-
शर्ग्भिर्ध्यायथ ॥ २ ॥

देवबृन्दप्रश्नमङ्गीकृत्य तथेत्यवोचत्। देवानभिमुखीकरणायेदमाह— सर्वे देवा इति। किं तदस्माभिः कर्तव्यमित्यत्र—तुरीयरूपामिति। या प्रणवत्वेन प्रकृता सौभाग्यमहालक्ष्मीस्तामर्धमात्रात्मना तुरीयरूपां नादात्मना तुरीयातीतां एवंरूपेण सर्वैरपि ज्ञातुमशक्यत्वात् सर्वोत्कटां सर्वदुरासदां नादरूपप्रकृतेरसमाहितचित्तैरासादितुमशक्यत्वात्, स्वाज्ञजनानुकम्पयैकाक्षरादि-सर्वमन्त्रासनगतां, पीठोपपीठदेवतापरिवृतां पीठं सौभाग्यलक्ष्मीविद्याप्रकटित-श्रीचक्रं तत्रत्यैकैककोणविलसितान्युपपीठानि चक्राणि तत्तत्पीठेश्वरीभिर्देवताभिः परिवृतां, चतुर्भुजां श्रियं "हिरण्यवर्णां हरिणीं" इत्यादि पञ्चदशर्ग्भिः ध्यायथ ध्यानं कुरुत। एवं ध्यायतां देवताप्रसादेन निर्विकल्पात्मकतुरीयतुरी-यातीतदेवताध्यानाधिकारो भवेदित्यर्थः ॥ २ ॥

श्रीसूक्तस्य ऋष्यादि

अथ पञ्चदशर्गात्मकस्य श्रीसूक्तस्यानन्दकर्दमचिक्लीतेन्दि-राসुता ऋषयः। श्रीरित्याद्या[या] ऋचः। [1]चतुर्दशानामृचामा-नन्दाद्यृषयः। हिरण्यवर्णामित्याद्यृक्त्रयस्यानुष्टुप् छन्दः। कांसो-ऽस्मीत्यस्य बृहती छन्दः। तदन्ययोर्द्वयोस्त्रिष्टुप्। पुनरष्टकस्यानुष्टुप्। शेषस्य प्रस्तारपङ्क्तिः। [2]श्र्यग्निर्देवता। हिरण्यवर्णामिति बीजम्। कांसोऽस्मीति शक्तिः। हिरण्मया चन्द्रा रजतस्रजा हिरण्यस्रजा हिरण्या हिरण्यवर्णेति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तैरङ्गन्यासः। अथ

[1] एतदादि "प्रस्तारपङ्क्तिः" इत्यन्तो ग्रन्थः उ, उ १, कोशयोः नास्ति.
[2] श्रीरग्नि—अ २, क.

वक्त्रत्रयैरङ्गन्यासः । मस्तकलोचनश्रुतिघ्राणवदन[1]कण्ठबाहुद्वय-[2]
हृन्नाभिगुह्यपायूरुजानुजङ्घेषु श्रीसूक्तैरेव क्रमशो न्यसेत् ॥ ३ ॥

[3]अमलकमलसंस्था तद्रजः[4]पुञ्जवर्णा
करकमलधृ[5]तेष्वाभीतियुग्माम्बुजा च ।
मणिमकुटविचित्रालंकृताकल्पजालैः
सकलभुवनमाता संततं श्रीः श्रियै [6]नः ॥ ४ ॥

हिरण्यवर्णामित्यादिपञ्चदशर्चामृषिच्छन्दोदेवताऽऽदिकमुच्यते—अथेति। श्रीशब्देनाग्निरुच्यते, वक्ष्यति चैवं "श्र्यग्निर्देवता" इति ॥ ३–४ ॥

सौभाग्यलक्ष्मीचक्रम्

तत्पीठम् । कर्णिकायां ससाध्यं श्रीबीजम्। वस्वादित्यकला-पद्मेषु श्रीसूक्तगतार्धार्धर्चा तद्बहिर्यः शुचिरिति मातृकया च श्रियं यन्त्राङ्गदशकं च विलिख्य श्रियमावाहयेत् ॥ ५ ॥ अङ्गैः प्रथमाऽऽवृतिः । पद्मादिभिर्द्वितीया । लोकेशैस्तृतीया । तदायुधै-स्तुरीयाऽऽवृतिर्भवति । श्रीसूक्तैरावाहनादि । षोडशसहस्रजपः ॥६॥

तस्याः सौभाग्यलक्ष्मीदेवतायाः पीठं चक्रमुच्यते । सौवर्णे राजते ताम्रे वा—

उत्तमं दशनिष्कं स्यान्मध्यमं पञ्चनिष्ककम् ।
अधमं कर्षमात्रं स्यात् पादहीनं न कारयेत् ॥

[1] कर्ण—अ १, अ २, क.
[2] नाभि—क. हृदयनाभि—अ १, अ २.
[3] अरुण—मु.
[4] पूर्ण—अ, अ १, उ १.
[5] तेष्टाभी—मु.
[6] नमः—उ १.

इति मन्त्रशास्त्रानुरोधेन चतुरश्रं यन्त्रं कृत्वा तन्मध्यकर्णिकायां मम सर्वाभीष्टसिद्धिं कुरुकुरु नम इति साध्येन सहितं ससाध्यं श्रीबीजं विलिख्य वस्वादित्यकलापद्मेषु अष्टद्वादशषोडशदलेषु श्रीसूक्तगतार्धार्धर्चाक्रमेण विलिख्य शिष्टषट्पत्रेषु कामधेनुं शङ्खनिधिमकरनिधिसौभाग्यनिधिमोक्षनिधिबोधकल्पकतरूणां मन्त्रान् प्रणवादिनमोऽन्तान् विलिख्य षोडशदळवृत्तात् बहिः यः शुचिरित्यृचा अकारादिळकारान्तपञ्चाशद्वर्णमातृकया च विलिख्य श्रियं श्रीबीजं परितो विलिख्य—

बीजं प्राणं च शक्तिं च दृष्टिं वश्यादिकं तथा ।
मन्त्रयन्त्राख्यगायत्रीप्राणस्थापनमेव च ।
भूतदिक्पालबीजानि यन्त्रस्याङ्गानि वै दश ॥

इति यन्त्राङ्गदशकं च विलिख्य श्रियमावाहयेत् ॥ ५ ॥ अथावरणान्युच्यन्ते—अङ्गैरिति । श्रां हृदयाय नमः इत्यादिषडङ्गैः प्रथमाऽऽवृतिः । पद्मा, पद्मवासिनी, पद्मालया, पद्महस्ता, पद्मप्रिया, वरदा, विष्णुपत्नी, आदिलक्ष्मीरिति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तैर्यजेत् । इन्द्राय नम इत्यादिलोकेशमन्त्रैः । वज्राय नम इति तदायुधैश्च पूजयेदित्यर्थः । अथ श्रीसूक्तैः आवाहनादिषोडशोपचारपूजां कुर्यात् । श्रीसूक्तपुरश्चरणा तु षोडशसहस्रजपः ॥ ६ ॥

एकाक्षरीमन्त्रस्य ऋष्यादि

सौभाग्यरमैकाक्षर्या भृगुनृचद्गायत्रीश्रिय ऋष्यादयः ।
शमिति बीजशक्तिः । श्रामित्यादि षडङ्गम् ॥ ७ ॥

भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा
शुभ्राभ्राभेभयुग्मद्वयकरधृतकुम्भाद्भिरासिच्यमाना ।
[2]रत्नौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या
पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रियै [3]नः ॥८॥

[1] शर्मी बी—अ, अ १. [2] रक्तौघ—मु.
[3] नमः—उ, १.

साङ्गमेकाक्षरीमनुं तत्पीठं चाह—सौभाग्येति ॥ ७ ॥ ध्यानं भूयादिति ॥ ८ ॥

### एकाक्षरीचक्रम्

तत्पीठम् । अष्टपत्रं वृत्तत्रयं द्वादशराशिखण्डं चतुरश्रं रमापीठं भवति । कर्णिकायां ससाध्यं श्रीबीजम् । विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिः सन्नति[1]र्व्युष्टिरुत्कृष्टिर्ऋद्धिरिति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तैर्नवशक्ति यजेत् ॥ ९ ॥ अङ्गैः प्रथमाऽऽवृतिः । वासुदेवा[2]दिर्द्वितीया । बालक्या[3]दिस्तृतीया । इन्द्रादिभिश्चतुर्थी भवति । द्वादशलक्षजपः ॥ १० ॥

तत्रैव विभूतिरित्यादि ॥ ९ ॥ पूर्ववत् अङ्गैः । वासुदेवादिचतुर्व्यूहैः द्वितीयाऽऽवृतिः । बालक्यादिः—आदिशब्देन भुक्तिर्मुक्तिर्विभूतिर्ऋद्धिः समृद्धिस्तुष्टिः पुष्टिर्धात्रीति प्रणवादिनमोन्तैश्चतुर्थ्यन्तैर्यजेत् ॥ १० ॥

### लक्ष्मीमन्त्रविशेषाः

श्रीलक्ष्मीर्वरदा विष्णुपत्नी वसुप्रदा हिरण्यरूपा स्वर्णमालिनी रजतस्रजा स्वर्णप्रभा स्वर्णप्राकारा पद्मवासिनी पद्महस्ता पद्मप्रिया मुक्तालंकारा चन्द्रा सूर्या बिल्वप्रिया ईश्वरी भुक्तिर्मुक्तिर्विभूतिर्ऋद्धिः समृद्धिः कृष्टिः पुष्टि[4]र्धनदा धनेश्वरी श्रद्धा भोगिनी भोगदा धात्री विधात्रीत्यादिप्रणवादिनमोऽन्ताश्चतुर्थ्यन्ता मन्त्राः । एकाक्षरवदङ्गादि-

[1] र्व्युष्टि—अ १, अ २. पुष्टि—क. व्युष्टिः सत्कृष्ट—मु.
[2] दिभिर्द्वि—उ, मु.
[3] दिभिस्तृ—उ, मु.
[4] र्वर्धना—उ, उ १.

पीठम् । लक्षजपः । दशांशं तर्पणम् । शतांशं हवनम् । सहस्रांशं द्विजतृप्तिः ॥ ११ ॥ निष्कामानामेव श्रीविद्यासिद्धिः । न कदाऽपि सकामानामिति ॥ १२ ॥

पुनर्लक्ष्मीमन्त्रविशेषानाह—श्रीरित्यादि ॥ ११-१२ ॥

इति प्रथमः खण्डः

---

## द्वितीयः खण्डः

उत्तमाधिकारिणां ज्ञानयोगः

अथ हैनं देवा ऊचुस्तुरीयया मायया निर्दिष्टं तत्त्वं ब्रूहीति । तथेति स होवाच—

योगेन योगो ज्ञातव्यो योगो योगात् प्रवर्धते ।
योऽप्रमत्तस्तु योगेन स योगी रमते चिरम् ॥ १ ॥

देवा नारायणमुखतो मन्त्रोपासनाकाण्डं यथावदवगम्य योगकाण्डबुभुत्सया भगवन्तं पृच्छन्तीत्याह—अथेति । तुरीयया अन्त्यया । तैरेवं पृष्टः तथेति स होवाच । किं तदित्यत्र—योगेनेति । ब्रह्मातिरिक्तं न किंचिदस्तीति ज्ञानमेव योगः, तेन ज्ञानयोगेन तत्त्वंपदगतवाच्यार्थनिरसनपूर्वकं तत्त्वंपदलक्ष्यभूतप्रत्यक्परचितोः योगो ज्ञातव्यः प्रत्यक्परचितोरैक्यस्य स्वाज्ञविकल्पितजीवपरभेदप्रहाणपूर्वकत्वात् । पुनः प्रत्यक्परयोः योगः ऐक्यं

ज्ञानयोगात् प्रवर्धते भेदप्रत्ययवैरल्येन दृढतां भजते । इत्थंभूतज्ञानयोगेन योऽप्रमत्तस्तु सदाऽनुसन्धानपर एव भवति सोऽयं योगी प्रत्यक्परचितोः योगः ऐक्यं तत्रैव चिरं रमते ॥ १ ॥

षण्मुखीमुद्राऽन्वितप्राणायामयोगः

समापद्य निद्रां सुजीर्णेऽल्पभोजी
श्रमत्याज्यबाधे विविक्ते प्रदेशे ।
सदाऽऽसीत निस्तृष्ण एष प्रयत्नो-
ऽथ वा प्राणरोधो निजाभ्यासमार्गात् ॥ २ ॥
वक्त्रेणापूर्य वायुं हुतवहनिलयेऽपानमाकृष्य धृत्वा
स्वाङ्गुष्ठाद्यङ्गुलीभिर्वरकरतलयोः षड्भिरेवं निरुध्य ।
श्रोत्रे नेत्रे च नासापुटयुगलमथोऽनेन मार्गेण सम्यक्
पश्यन्ति [1]प्रत्ययांसं प्रणवबहुविधध्यानसंलीनचित्ताः ॥ ३ ॥

इत्युत्तमाधिकारिणामेवं ज्ञानयोगमुक्त्वाऽथ षण्मुखीमुद्राऽन्वितप्राणायामयोगमाह—समापद्येति ।

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

इति स्मृत्यनुरोधेन निद्रां समापद्य यथोक्तकाले निद्रां कृत्वाऽथ पूर्वभुक्तान्ने जीर्णे ततोऽल्पभोजी अल्पाहारी योगानुकूलेन मिताहारं कुर्वन् श्रमत्याजी जितश्रमो भूत्वा अबाधे मशकपिपीलिकामत्कुणादिबाधारहिते विविक्ते जनसंबाधरहिते प्रदेशे मृद्वास्तरणे समारोपितपद्माद्यासने सदाऽऽसीत सर्वदा तिष्ठेत्

[1] प्रत्ययांशं—मु.

नानाविधफल्गुसिद्धिजाले निस्तृष्णो विगततृष्णो भूत्वा देशिकमुखतो लब्धनिजाभ्यासमार्गात् अप्रच्युतो भूत्वा एष योगी ग्रन्थित्रयभेदने कृतप्रयत्नो भूयात् । अथवा तादृशशक्त्यभावे तदुपायतयाऽनेन प्राणरोधः प्राणायामः कर्तव्यः ॥ २ ॥ षण्मुखीमुद्रां तत्फलं चाह—वक्त्रेणेति । केचन योगिनः सीत्कारपूर्वकं वक्त्रेण वायुमापूर्य ऊर्ध्वगतिं प्राणमधोगतिं विधाय तथा हुतवहनिलये मूलाधारत्रिकोणस्थाग्निमण्डले अपानमाकृष्य आकुञ्च्य धृत्वा मूलाधारे धारणां कृत्वा स्वाङ्गुष्ठाद्यङ्गुलीभिः षड्भिः श्रोत्रादिकरणानि पिधाय योगिनः प्रणवप्रविभक्तविश्वविराडोत्रादिद्वितुर्याविकल्पान्तबहुविधध्यानसंलीनचित्ताः सन्तः सहस्रारचक्रे प्रत्ययांसं प्रत्यक्चैतन्यं पराभेदेन सम्यक्पश्यन्ति अपरोक्षीकुर्वन्तीत्यर्थः ॥ ३ ॥

नादाविर्भावपूर्वको ग्रन्थित्रयभेदः

श्रवणमुखनयननासानिरोधनेनैव कर्तव्यम् ।
शुद्धसुषुम्नासरणौ स्फुटममलं श्रूयते नादः ॥ ४ ॥
विचित्रघोषसंयुक्ताऽनाहते श्रूयते ध्वनिः ।
दिव्यदेहश्च तेजस्वी दिव्यगन्धोऽप्यरोगवान् ॥ ५ ॥
संपूर्णहृदयः शून्ये त्वारम्भे योगवान् भवेत् ।
द्वितीयां विघटीकृत्य वायुर्भवति मध्यगः ॥ ६ ॥
दृढासनो भवेद्योगी पद्माद्यासनसंस्थितः ।
विष्णुग्रन्थेस्ततो भेदात् परमानन्दसंभवः ॥ ७ ॥
अतिशून्यो विमर्दश्च भेरीशब्दस्ततो भवेत् ।
तृतीयां यत्नतो भित्त्वा निनादो मर्द्दलध्वनिः ॥ ८ ॥

एवं षण्मुखीमुद्राऽभ्यासतो ब्रह्मग्रन्थ्यादिग्रन्थित्रयमपि भिद्यते, प्रतिग्रन्थिभेदनं विचित्रनानाविधनादाविर्भावो भवति, तन्नादलयतो निर्विकल्पकसमाधिर्जायत

इत्याह—श्रवणेति। श्रवणादिकरणनिरोधलक्षणषण्मुखीमुद्राऽभ्यसनं योगिना कर्तव्यम्। एवं चिरकालाभ्यासतः प्राणवायुः सुषुम्नां प्रविशति, तत्प्रवेशमात्रेण सुषुम्नामार्गे नादाविर्भावो भवतीत्यर्थः ॥ ४ ॥ एवं नादश्रवणतोऽयं भवति योगीत्याह—विचित्रेति। यदा सुषुम्नायां प्राणः प्रविशति तदा योगिनः अनाहते हृदयकमले विचित्रघोषवति ध्वनिः श्रूयते। तावन्मात्रेण नीरोगो भूत्वा तेजोवद्दिव्यगन्धो भवति ॥ ५ ॥ संपूर्णविकसितहृदयश्च भवति। शून्ये तत्रत्याकाशे तु नादारम्भमात्रेणायं दिव्ययोगवान् भवेदित्यर्थः। ब्रह्मग्रन्थिभेदतो दिव्यदेहादिसिद्धिरुक्ता, अथ विष्णुग्रन्थिभेदतो भेरीध्वनिरुदेतीत्याह—द्वितीयामिति। प्रथमभूमिकां जित्वाऽथ द्वितीयां भूमिकामपि विष्णुग्रन्थिभेदनरूपां विशेषेण घटीकृत्य विष्णुग्रन्थिं भित्त्वा तद्भेदतो वायुर्मध्यगतो भवति ॥ ६ ॥ ततः पद्माद्यासनस्थस्य योगिनः परमानन्द उदेति ॥ ७ ॥ अतिशून्योऽनाहतमप्यतिक्रम्य ततोऽतिविमर्दो भेरीशब्दो भवेदित्यर्थः। रुद्रग्रन्थिभेदतो वैष्णवनाद उदेति ततस्तच्चित्तं ब्रह्माकारं भवतीत्याह—तृतीयामिति। रुद्रग्रन्थिरूपां तृतीयभूमिकां दुर्भेद्यामपि यत्नतो भित्त्वा वर्तमानस्य योगिनो मर्दलध्वनिः श्रूयते ॥ ८ ॥

अखण्डब्रह्माकारवृत्तिः

महाशून्यं ततो याति सर्वसिद्धिसमाश्रयम्।
चित्तानन्दं ततो भित्त्वा सर्वपीठगतानिलः ॥ ९ ॥
निष्पत्तौ वैष्णवः शब्दः क्वणतीति क्वणो भवेत्।
एकीभूतं तदा चित्तं सनकादिमुनीडितम् ॥ १० ॥
अन्तेऽनन्तं समारोप्य खण्डेऽखण्डं समर्पयन्।
भूमानं प्रकृतिं ध्यात्वा कृतकृत्योऽमृतो भवेत् ॥ ११ ॥

ततः तत्प्राणो सर्वसिद्ध्यास्पदं महाशून्यं सहस्राराकाशं याति। तदा चित्तमानन्दाभिमुखं भवति। तत्रानास्वादतश्चित्तानन्दमपि भित्त्वा वर्तमानस्य

प्राणानिल: कामरूपपीठादिसर्वपीठगतो भवति ॥ ९ ॥ एवं योगनिष्पत्तौ क्वणतीति क्वणो वैष्णव: शब्दो भवेत् । यत्प्रत्यग्ब्रह्मैक्यं "पश्यतेहापि सन्मात्रमसदन्यत्," "ब्रह्ममात्रमसदन्यत्" इत्यादिश्रुतिशतेन सनकादिमुनीडितं तत्रैव चित्तमेकीभूतं ब्रह्माकाराखण्डवृत्तिमद्भवतीत्यर्थ: ॥ १० ॥ स्वाज्ञदृष्टिविकल्पितस्वातिरिक्तपरिच्छिन्नखण्डप्रपञ्चे सति कथमखण्डब्रह्ममात्रज्ञानं तत्फलसिद्धिर्वेत्याशङ्क्याह—अन्त इति । स्वाज्ञदृष्ट्या यदि व्यष्ट्यात्मकोऽन्त:परिच्छिन्नपिण्डाण्ड: कल्पितो भवति तदा स्वज्ञदृष्टिमवलम्ब्य तदन्ते देहादौ अनन्तं पराक्सापेक्षप्रत्यञ्चं समारोप्य अथ समष्टिप्रपञ्चखण्डे तदपवादाधारतया अखण्डं ब्रह्म समर्पयन् प्रत्यक्परयोरैक्यं कुर्वन् तत: प्रत्यक्परविभागैक्यासहब्रह्ममात्रप्रकृतिं भूमानं स्वमात्रमिति ध्यात्वा कृतकृत्यो विद्वान् अमृतो विदेहमुक्तो भवेत् भवतीत्यर्थ: ॥ ११ ॥

निर्विकल्पभाव:

योगेन योगं संरोध्य भावं भावेन चाञ्जसा ।
निर्विकल्पं परं तत्त्वं सदा भूत्वा परं भवेत् ॥ १२ ॥
अहंभावं परित्यज्य जगद्भावमनीदृशम् ।
निर्विकल्पे स्थितो विद्वान् भूयो नाप्यनुशोचति ॥ १३ ॥

सविकल्पप्रपञ्चे सति ब्रह्ममात्रावगति: कुत इत्यत आह—योगेनेति । निष्प्रतियोगिकब्रह्ममात्रज्ञानयोगेन स्वातिरिक्तयोगं संरोध्य अपह्नवं कृत्वा अञ्जसा भावं विकल्पप्रपञ्चं निष्प्रतियोगिकब्रह्ममात्रभावेन ज्ञात्वा तत्समकालं विद्वान् निर्विकल्पपरब्रह्मतत्त्वं स्वयं भूत्वा सदा परमेव भवेत् भवति, "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुते: ॥ १२ ॥ अहमिदमिति विकल्पे सति निर्विकल्पता कुत इत्यत आह—अहमिति । देहादौ तद्बाह्ये च अहंभावं जगद्भावं च "ब्रह्मातिरिक्तं न किंचिदस्ति" इति परित्यज्य अनीदृशं निर्विशेषं ब्रह्मास्मीति विद्वान् निर्विकल्पे स्थित: सन् भूयोऽपि न शोचति विषयाभावादित्यर्थ: ॥ १३ ॥

समाधिलक्षणम्

सलिले सैन्धवं यद्वत् साम्यं भवति योगतः ।
तथाऽऽत्ममनसोरैक्यं समाधिरभिधीयते ॥ १४ ॥
यदा संक्षीयते प्राणो मानसं च प्रलीयते ।
तदा समरसत्वं यत् समाधिरभिधीयते ॥ १५ ॥
यत् समत्वं तयोरत्र जीवात्मपरमात्मनोः ।
समस्तनष्टसंकल्पः समाधिरभिधीयते ॥ १६ ॥
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ।
सर्वशून्यं निराभासं समाधिरभिधीयते ॥ १७ ॥
स्वयमुच्चलिते देहे देही नित्यसमाधिना ।
निश्चलं तं विजानीयात् समाधिरभिधीयते ॥ १८ ॥
यत्रयत्र मनो याति तत्रतत्र परं पदम् ।
तत्रतत्र परं ब्रह्म सर्वत्र समवस्थितम् ॥ १९ ॥

अशोच्यनिर्विकल्पे स्थितिः केत्यत आह—सलिल इति । सलिलप्रक्षिप्त-पेषितसैन्धवपिण्डविलयवत् प्रत्यगभिन्नपरमात्मनि मनःप्राणविलय एव समाधि-रित्यर्थः ॥ १४ ॥ इतश्च समाधिलक्षणमाह—यदेति । यदा मनःप्राणादिकं विलीयते, यदा च प्रत्यगभिन्नब्रह्मणो यत् समरसत्वं अखण्डैकरसत्वमुदेति तदैव समाधिर्भवतीत्यर्थः ॥ १५ ॥ इतश्च संकल्पाद्यनुदय एव समाधिरित्याह—यदिति ॥ १६ ॥ जाग्रदाद्यवस्थात्रयकलना यत्र न विद्यते स समाधिरित्याह—प्रभेति । प्रभाशब्देन अहंकृतिपूर्णविकासरूपं जाग्रदुच्यते । मनःशब्देन अहं-कृत्यर्धविकासात्मकः स्वप्न उच्यते । स्वातिरिक्तं नास्तीति बुध्यत इति बुद्धिशब्देन अहंकृतिमुकुलीभावरूपेयं सुषुप्तिरुच्यते । एवं जाग्रदाद्यवस्थात्रयं

यत्र शून्यं अपह्नवं वा भजति यस्तदपह्नवसिद्धः सोऽयमसंप्रज्ञातसमाधिरुच्यते ॥ १७ ॥ इतश्च निश्चलतास्थितिरेव समाधिरित्याह—स्वयमिति । "ब्रह्मातिरिक्तं न किंचिदस्ति" इति नित्यसमाधिना देहे तदुपलक्षिताविद्यापदतत्कार्यजाते स्वात्मात्मीयाभिमतिवैरल्येन स्वयमेवोच्चलिते नामरूपकलनां त्यक्त्वा ब्रह्मभावं गते सति, अथ देही योगी यो निर्विशेषतयाऽवशिष्टस्तमात्मानं यदा स्वावशेषतया विजानीयात् तद्वेदनावस्थैवाऽखण्डनिर्विकल्पकसमाधिरित्यर्थः ॥ १८ ॥ मनःप्रचारविलयाधिकरणं ब्रह्मेत्याह—यत्रेति । स्वातिरिक्तं मनोऽस्तीति ये मन्यन्ते तद्दृष्टिमाश्रित्य स्वातिरिक्तकल्पकं मनो यत्र प्रचरति यत्र वा विलीयते तत्कल्पनालयाधिष्ठानं ब्रह्म सर्वगतं सर्वव्यापकं, वस्तुतो मनस्तत्कार्यव्याप्याभावाद्व्यापकत्वमपि न युज्यत इत्यर्थः, "व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात्" इति श्रुतेः ॥ १९ ॥

इति द्वितीयः खण्डः

---

## तृतीयः खण्डः

आधारचक्रम्

अथ हैनं देवा ऊचुर्नवचक्रविवेकमनुब्रूहीति ।

तथेति स होवाच—

आधारे [1]ब्रह्मचक्रं त्रिरावृत्त[2]भगमण्डलाकारं तत्र मूलकन्दे शक्तिः पावकाकारं ध्यायेत् तत्रैव कामरूपपीठं सर्व[3]कामप्रदं भवति इत्याधारचक्रम् ॥ १ ॥

[1] प्रथमं—उ, उ १. [2] भग—उ, क. [3] कामफलप्रदं—अ १, अ २.

पुनर्देवा नवचक्रबुभुत्सया पृच्छन्तीत्याह—अथेति। नवचक्रविवेकमनुब्रूहि इति तैरेवं पृष्टः तथेति स होवाच भगवान् नारायणः। अत्राद्यं चक्रमाह—आधार इति। मूलाधारे त्रिरावृत्तभङ्ग्या वह्निमण्डलाकारं ब्रह्मचक्रं विराजते। तत्र मूलकन्दे काचन शक्तिरस्ति, तद्रूपं पावकाकारं ध्यायेत्। तत्रैव मूलाधारे सर्वकामप्रदतया कामरूपपीठं विराजते इति यत् तत् आधारचक्रं भवति ॥ १ ॥

स्वाधिष्ठानचक्रम्

द्वितीयं स्वाधिष्ठानचक्रं षड्दलं तन्मध्ये पश्चिमाभि[1]मुख्यं लिङ्गं प्रवालाङ्कुरसदृशं ध्यायेत् तत्रैवोड्याणपीठं जगदाकर्षणसिद्धिदं भवति ॥ २ ॥

द्वितीयचक्रमाह—द्वितीयमिति। षड्दलाख्यं स्वाधिष्ठानचक्रम्। तत्र मांसाकारं पश्चिमाभिमुख्येन ज्योतिर्लिङ्गमस्ति, तत्प्रवालसदृशं ध्यायेत्। तत्रैव जगदाकर्षणशक्तिमत् उड्याणपीठं विराजत इति ॥ २ ॥

नाभिचक्रम्

तृतीयं नाभिचक्रं [2]पञ्चावर्तं सर्पकुटिलाकारं तन्मध्ये कुण्डलिनीं बालार्ककोटिप्रभां तटित्संनिभां ध्यायेत् सामर्थ्यशक्तिः सर्वसिद्धिप्रदा भवति मणिपूरकचक्रम् ॥ ३ ॥

तृतीयचक्रमाह—तृतीयमिति। मणिपूरकचक्रमाश्रित्य कुण्डलिनी वर्तते तटित्प्रभा, तां ध्यायतः सर्वसिद्धिर्भवति ॥ ३ ॥

[1] मुखलि—उ १.　[2] पञ्चावृत्तं—उ १.

हृदयचक्रम्

हृदयचक्रमष्टदलमधोमुखं तन्मध्ये ज्योतिर्मयलिङ्गाकारं ध्यायेत् सैव हंसकला सर्वप्रिया सर्वलोकवश्य[1]करी भवति ॥ ४ ॥

तुरीयचक्रमाह—हृदयेति । अष्टपत्राढ्यं अधोमुखं अनाहतचक्रं भवति । तत्रत्याकाशमध्ये कामादिवृत्तिसहस्रभावाभावप्रकाशकं ज्योतिर्लिङ्गाकारं प्रत्यञ्चमात्मानं ध्यायेत् । येह सर्वप्राणिनां हृदयाष्टदले संचरति सैव हंसकला सर्वात्मकतया सर्वजनप्रियकरी । तत्स्वरूपध्यानं सर्वलोकवश्यकरं भवति ॥ ४ ॥

कण्ठचक्रम्

कण्ठचक्रं चतुरङ्गुलं तत्र वामे इडा चन्द्रनाडी दक्षिणे पिङ्गला सूर्यनाडी तन्मध्ये सुषुम्नां श्वेतवर्णां ध्यायेत् य एवं वेदानाहतसिद्धिदा भवति ॥ ५ ॥

पञ्चमचक्रमाह—कण्ठेति ॥ ५ ॥

तालुचक्रम्

तालुचक्रं तत्रामृतधाराप्रवाहो घण्टिकालिङ्गं मूलचक्ररन्ध्रे राजदन्तावलम्बिनीविवरं [2]दशमद्वारं तत्र शून्यं ध्यायेत् चित्तलयो भवति ॥ ६ ॥

चित्तलयफलदं षष्ठं चक्रमाह—तालिवति । तालुमूलचक्रे लक्ष्यं ध्यायतः सूर्याचन्द्रमसोरैक्यं भवति । तत अमृतधाराप्रवाहो भवति । तत्रोर्ध्वमूलचक्ररन्ध्रे यदन्तर्जिह्वेति प्रसिद्धं घण्टिकालिङ्गं वर्तते राजदन्तावलम्बिनीविवरं दशमद्वारं तत्र वृत्तिशून्यं ध्यायतः चित्तलयो भवति ॥ ६ ॥

[1] करं—अ १, अ २. करा—क. [2] दशमद्वादशारं—अ २, क.

भ्रूचक्रम्

सप्तमं भ्रूचक्रमङ्गुष्ठमात्रं तत्र ज्ञाननेत्रं दीपशिखाऽऽकारं ध्यायेत् तदेव कपालकन्दं वाक्सिद्धिदं भवत्याज्ञाचक्रम् ॥ ७ ॥

सप्तमचक्रलक्षणमाह—सप्तममिति । आज्ञाचक्रे ज्ञाननेत्रं ध्यायतः परापरब्रह्मज्ञानं वाक्सिद्धिश्च भवतीत्यर्थः । आज्ञाचक्रं तदेव भवति ॥ ७ ॥

ब्रह्मरन्ध्रचक्रम्

ब्रह्मरन्ध्रं निर्वाणचक्रं तत्र सूचिकागृहेतरं धूम्रशिखाऽऽकारं ध्यायेत् तत्र जालन्धरपीठं मोक्षप्रदं भवतीति [2]परब्रह्मचक्रम् ॥ ८ ॥

अष्टमचक्रलक्षणमाह—ब्रह्मेति । सूचिकागृहेतरं ततोऽपि सूक्ष्माकारं बिलं धूमशिखाऽऽकारं ध्यायेत् ॥ ८ ॥

आकाशचक्रम्

नवममाकाशचक्रं तत्र षोडशदलपद्ममूर्ध्वमुखं तन्मध्यकर्णिकात्रिकूटाकारं तन्मध्ये ऊर्ध्वशक्तितां [3]परशून्यं ध्यायेत् तत्रैव पूर्णगिरिपीठं सर्वेच्छासिद्धिसाधनं भवति ॥ ९ ॥

नवमचक्रलक्षणमाह—नवममिति । षोडशदलान्वितं ऊर्ध्वमुखमाकाशचक्रं भवति । तन्मध्ये त्रिकूटाकारं ज्योतिर्वर्तते । त्रिकूटशब्देन भ्रूमध्यमुच्यते । तन्मध्ये "ऊर्ध्वमुन्नयते इत्योंकारः" इति श्रुत्यनुरोधेन ऊर्ध्वशक्तितां तुरीयोङ्काररूपतां तत्परमर्धमात्राप्रविभक्तभागत्रयमपि ब्रह्मातिरिक्तं नेतीति शून्यं

[1] अष्टमं ब्र—उ, उ १, मु.
[2] ब्रह्मरन्ध्रचक्रं—उ, उ १.
[3] पश्यन् ध्या—अ २, क.

ध्यायेत् । तत्रैव पूर्णमेवावशिष्यत इति पूर्णगिरिपीठं निष्प्रतियोगिकपूर्णब्रह्ममात्रमवशिष्यते । तदेवं "सर्वं खल्विदं ब्रह्म" इति सर्ववर्जितचिन्मात्रमिति चेच्छासिद्धिस्थानं ब्रह्मैव भवतीत्यर्थः ॥ ९ ॥

एतदुपनिषदध्ययनफलम्

सौभाग्यलक्ष्म्युपनिषदं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स सकलधनधान्यसत्पुत्रकलत्रहयभूगजपशुमहिषीदासीदासयोगज्ञानवान् भवति न स पुनरावर्तत इत्युपनिषत् ॥ १० ॥

विद्याफलमाह—सौभाग्येति । उपनिषच्छब्दः सौभाग्यलक्ष्म्युपनिषत्समाप्त्यर्थः ॥ १० ॥

इति तृतीयः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
सौभाग्यलक्ष्म्युपनिषद्व्याख्यानं लिखितं स्फुटम् ।
सौभाग्यवृत्तिग्रन्थस्तु चत्वारिंशाधिकं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चोत्तरशतसङ्ख्यापूरकं
सौभाग्यलक्ष्म्युपनिषद्विवरणं संपूर्णम्

# नामधेयपदसूची

यत्र पुटसंख्याऽनन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिर्बोध्या

# विशेषपदसूची

यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिर्बोध्या

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, 20, India)

| | | Rs. | A. |
|---|---|---|---|
| 1910—1. | A PRELIMINARY LIST OF THE SAṀSKṚT AND PRĀKṚT MSS. in the Adyar Library. (Saṁskṛt-Devanāgarī). Boards ... Rs. 1-8. Cloth ... | 2 | 0 |
| 1912—2. | A DESCRIPTIVE CATALOGUE OF THE SAṀSKṚT MSS. in the Adyar Library. *By* F. O. Schrader, Vol. I, Upaniṣads. Cloth ... | 5 | 0 |
| 3. | THE MINOR UPANIṢADS (Saṁskṛt) critically edited for the Adyar Library. *By* F. O. Schrader, Vol. I.—Saṁnyāsa. Cloth ... | 10 | 0 |
| 1916—4. | AHIRBUDHNYA-SAṀHITĀ OF THE PĀÑCARĀTRA ĀGAMA (Saṁskṛt). 2 Vols. Cloth ... | 10 | 0 |
| 5. | INTRODUCTION (English) TO THE PĀÑCARĀTRA AND THE AHIRBUDHNYA SAṀHITĀ. *By* F. O. Schrader. Cloth ... | 3 | 0 |
| 1920—6. | YOGA UPANIṢADS 20—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1921—7. | SĀMĀNYA VEDĀNTA UPANIṢADS 24—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1923—8. | VAIṢṆAVA UPANIṢADS 14—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 4 | 0 |
| 1925—9. | S'AIVA UPANIṢADS 15—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri (Reprinted 1950) ... | 5 | 8 |
| 10. | S'ĀKTA UPANIṢADS 8—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri (Reprinted 1950) ... | 3 | 8 |
| 1926—11. | CATALOGUE OF SAMSKṚT MSS. in the Adyar Library (Revised). 2 Vols. Each ... | 3 | 12 |
| 1929—12. | SAṀNYĀSA UPANIṢADS 17—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* T. R. Chintamani, and the Paṇḍits of the Adyar Library ... | 4 | 0 |
| 13. | RUKMIṆĪKALYĀṆA-MAHĀKĀVYA by Rājacūḍāmaṇi-Dīkṣita. Edited *by* the Paṇḍits of the Adyar Library and T. R. Chintamani | 2 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| 1933—14. | UNPUBLISHED MINOR UPANIṢADS with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* the Paṇḍits of the Adyar Library. ... | 5 | 0 |
| 1936—15. | TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* the Paṇḍits of the Adyar Library | | |
| | Īs'a to Aitareya, Vol. I ... | 4 | 8 |
| | Chāndogya and Bṛhadāraṇyaka, Vol. II ... | 6 | 0 |
| | Vols. 1 and 2, Boards ... | 9 | 8 |
| 1937—16. | MELARĀGAMĀLIKĀ of Mahāvaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 2 | 0 |
| 1938—17. | SAṀGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 18. | PRATYABHIJÑĀHṚDAYA (The Secret of Recognition) with English Translation and Notes *by* K. F. Leidecker ... | 3 | 0 |
| 19. | BHAVASAṄKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAṀKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinātha —with English Translation *by* Paṇḍit N. Aiyaswami Sastri ... | 2 | 4 |
| 20. | YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 21. | * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga: | | |
| | Parts 1 and 2. Nature and Man ... | 9 | 0 |
| | Part 3. God—From Humanity to Divinity ... | 2 | 8 |
| | Part 4. Some Practical Applications ... | 2 | 8 |
| 1939—22. | ṚGVEDAVYĀKHYĀ, MĀDHAVAKṚTĀ—Edited *by* Prof. C. Kunhan Raja. Vol. I ... | 6 | 0 |
| 1940—23. | THE NUMBER OF RASAS *by* V. Raghavan, Department of Saṁskṛt, University of Madras ... | 3 | 0 |
| 1941—24. | SĀMĀNYA VEDĀNTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 25. | BHAGAVADGĪTĀRTHAPRAKĀS'IKĀ of S'rī Upaniṣad-Brahmayogin (Saṁskṛt). Edited *by* the Paṇḍits of the Adyar Library ... | 4 | 0 |
| 26. | SĀMAVEDA-SAṀHITĀ—With the Commentaries of Mādhava and Bharatasvāmin. Edited *by* Prof. C. Kunhan Raja ... | 6 | 0 |
| 27. | RĀJA DHARMA (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) *by* Rao Bahadur K. V. Rangaswami Aiyangar ... | 3 | 8 |

* *Published under the auspices of the Adyar Library Association.*

Rs. A.

28. VARIVASYĀRAHASYA of Bhāsurānandanātha (Second Edition—Reprinted, 1948). Edited *by* Paṇḍit S. Subrahmanya Sastri (with English Translation Etc.) ... 5 0

29. VYAVAHĀRANIRṆAYA OF VARADARĀJA—Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar and A. N. Krishna Aiyangar ... 15 0

30. SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. I. (Adhyāya 1) ... 9 0

1942—31. CATALOGUE OF THE ADYAR LIBRARY, Western Section, Part 1 ... 5 0

32. ĀLAMBANAPARĪKṢĀ AND VṚTTI *by* Diṅnāga. Edited with English translation, Tibetan text etc. *by* Paṇḍit N. Aiyaswami Sastri ... 3 8

33. SOME CONCEPTS OF ALAṀKĀRA-S'ĀSTRA *by* V. Raghavan, University of Madras ... 4 0

34. VEDĀNTAPARIBHĀṢĀ—with English translation and Notes *by* Prof. S. S. Suryanarayana Sastri ... 2 12

35. DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K. Madhava Krishna Sarma. Vol. I—Vedic ... 15 0

36. S'RĪ PĀÑCARĀTRA-RAKṢĀ of S'rī Vedānta-Des'ika—Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar and Vedānta S'iromaṇi T. Venugopalacharya ... 4 8

37. CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 2 ... 6 0

38. CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with three commentaries—Edited *by* Paṇḍit N. Santanam Aiyar. Vol. I ... 4 8

1943—39. PHILOSOPHY OF VIS'IṢṬĀDVAITA *by* Prof. P. N. Srinivasachari ... 10 0

40. VĀDĀVALĪ OF JAYATĪRTHA. Edited with English translation and Notes *by* P. Nagaraja Rao ... 4 0

41. SPINOZIAN WISDOM OR NATURAL RELIGION *by* James Arther ... 2 12

42. UṢĀṆIRUDDHA of Rāmapāṇivāda. Edited *by* Paṇḍit S. Subrahmanya Sastri and Prof. C. Kunhan Raja ... 3 8

1944—43. SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. II. (Adhyāyas 2—4) ... 9 0

44. ĀS'VALĀYANAGṚHYASŪTRA—With the Commentaries of Devasvāmin and Nārāyaṇa. Edited *by* Svami Ravi Tirtha. Vol. I (Adhyāya 1) ... 6 4

| | | Rs. | A. |
|---|---|---|---|
| 45. | ALPHABETICAL INDEX OF SANSKRIT MANUSCRIPTS in the Adyar Library ... | 10 | 0 |
| 46. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, Part 3 ... | 7 | 0 |
| 47. | ĀTMAN IN PRE-UPANIṢADIC VEDIC LITERATURE *by* H. G. Narahari ... | 8 | 0 |
| 1945—48. | RĀGAVIBODHA OF SOMANĀTHA with his own commentary Viveka. Edited by Paṇḍit S. Subrahmanya Sastri ... | 6 | 0 |
| 49. | ACYUTARĀYĀBHYUDAYA OF RĀJANĀTHA ḌIṆḌIMA—Sargas 7 to 12. Edited *by* A. N. Krishna Aiyangar ... | 3 | 8 |
| 50. | ANCIENT WISDOM OF WALES *by* D. Jeffrey Williams ... | 1 | 4 |
| 51. | SAṀGĪTARATNĀKARA OF S'ĀRṄGADEVA—Vol. I. Chapter I. English Translation *by* Prof. C. Kunhan Raja. Cloth Rs. 4-8. Boards ... | 4 | 0 |
| 52. | VAIṢṆAVA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti ... | 10 | 0 |
| 1946—53. | NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English *by* Svami Ravi Tirtha. (Vol. I—Books i and ii)... | 4 | 0 |
| 54. | PRĀKṚTAPRAKĀS'A OF VARARUCI with the Commentary of Rāmapāṇivāda. Edited *by* Prof. C. Kunhan Raja and Paṇḍit K. Ramachandra Sarma ... | 4 | 4 |
| 55. | SPHOṬAVĀDA OF NĀGES'A—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary ... | 3 | 12 |
| 1947—56. | THE CRADLE OF INDIAN HISTORY *by* C. R. Krishnamacharlu ... | 3 | 8 |
| 57. | UNMATTARĀGHAVA OF VIRŪPĀKṢA—Edited *by* Paṇḍit V. Krishnamacharya ... | 1 | 12 |
| 58. | ORIGIN AND SPREAD OF THE TAMILS (Sankara-Parvati Lectures, 1940, University of Madras) *by* V. R. Ramachandra Dikshitar ... | 3 | 8 |
| 59. | JĪVĀNANDANAM OF ĀNANDARĀYAMAKHIN. Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar with his own Commentary ... | 20 | 0 |
| 60. | DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* Paṇḍit V. Krishnamacharya, Vol. VI—Grammar, Prosody and Lexicography ... | 25 | 0 |
| 61. | ṚGVEDAVYĀKHYĀ of Mādhava, Vol. II, edited by Prof. C. Kunhan Raja ... | 15 | 0 |
| 62. | DESCRIPTIVE CATALOGUE OF PALI MSS. in the Adyar Library, *by* Dr. E. W. Adikaram ... | 6 | 0 |
| 1948—63. | HARICARITA OF PARAMES'VARA—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary ... | 5 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| | 64. GAUTAMA-DHARMASŪTRA-PARIS'IṢṬA (Second Pras'na)—Edited *by* A. N. Krishna Aiyangar ... | 9 | 0 |
| | 65. SAṀKALPASŪRYODAYA OF S'RĪ VEṄKAṬANĀTHA with the Commentaries Prabhāvilāsa and Prabhāvalī. Edited *by* Paṇḍit V. Krishnamacharya Part I ... | 15 | 0 |
| | Part II ... | 15 | 0 |
| | Reprint of No. 28—VARIVASYĀRAHASYA of Bhāsurānandanātha—Edited by Paṇḍit S. Subrahmanya Sastri (with English translation, Etc.) ... | 5 | 0 |
| **1949**— | 66. INDIAN CAMERALISM (A Survey of some aspects of Arthas'āstra) *by* K. V. Rangaswami Aiyangar ... | 7 | 0 |
| | Second Edition—Revised and Enlarged—of No. 21—WHERE THEOSOPHY AND SCIENCE MEET (Parts 1 and 2, Nature and Man) by a body of Experts, Edited *by* Prof. D. D. Kanga ... | 9 | 0 |
| | 67. TIRUKKUṞAḶ OF TIRUVAḶḶUVAR—(In Roman Transliteration) with English Translation by Prof. V. R. Ramachandra Dikshitar ... | 3 | 0 |
| | 68. TIRUKKUṞAḶ OF TIRUVAḶḶUVAR, with English Translation *by* Prof. V. R. Ramachandra Dikshitar ... | 3 | 0 |
| | 69. CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 4 (French) ... | 1 | 12 |
| | 70. ALAṀKĀRASAṀGRAHA by Amṛtānandayogin. Edited *by* Paṇḍit V. Krishnamacharya and Paṇḍit K. Ramachandra Sarma ... | 9 | 0 |
| | 71. YĀJÑIKYUPANIṢAD VIVARAṆAM BY PURUṢOTHAMĀNANDA TĪRTHA—Edited *by* Paṇḍit V. Krishnamacharya and Paṇḍit K. Ramachandra Sarma ... | 2 | 8 |
| **1950**— | 72. EDICTS OF AS'OKA (Priyadars'in). With English Translation *by* G. Srinivasa Murti and A. N. Krishna Aiyangar. Boards Rs. 2-0. Cloth ... | 3 | 0 |
| | 73. SOME ASPECTS OF EDUCATION IN ANCIENT INDIA (Dewan Bahadur K. Krishnaswami Rao Endowment Lectures, University of Madras, 1949) *by* Prof. C. Kunhan Raja ... | 2 | 8 |
| | Reprint of No. 9. S'AIVA UPANIṢADS. 15—with the commentary of S'rī Upaniṣad Brahma Yogin—Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 8 |
| | Reprint of No. 10. S'ĀKTA UPANIṢADS. 8—with the commentary of S'rī Upaniṣad Brahma Yogin—Edited *by* Paṇḍit A. Mahadeva Sastri ... | 3 | 8 |

## PAMPHLETS

Rs. A.

### 1939

VARIANT VERSION OF THE EKĀGNIKĀṆḌA. (Reprinted from the Adyar Library Bulletin, October, 1939). Edited *by* K. Madhava Krishna Sarma ... 0 3

### 1940

RĀJAMṚGĀṄKA OF BHOJA. (Reprinted from the Adyar Library Bulletin, October, 1940). Edited *by* K. Madhava Krishna Sarma 0 4

### 1942

ṢAṬPAÑCĀS'IKĀ, a S'ilpas'āstra manual. (Reprinted from the Adyar Library Bulletin. February, 1942). Edited *by* K. Madhava Krishna Sarma ... 0 5

PRAMĀṆAMAÑJARĪ OF SARVADEVA. (Reprinted from the Adyar Library Bulletin, May, 1942). Edited *by* K. Madhava Krishna Sarma ... 0 6

A LIST OF MANUSCRIPTS. (Reprinted from the Adyar Library Bulletin, October, 1942) ... 1 0

THE PATH OF GREATNESS. (Reprinted from the Adyar Library Bulletin, December, 1942), *by* Dr. G. S. Arundale ... 0 6

### 1943

VIS'EṢĀMṚTA of Tryambaka Mis'ra. (An orthographical lexicon). Edited *by* H. G. Narahari. (Reprinted from the Adyar Library Bulletin, May, 1943) ... 0 12

A SANSKRIT LETTER OF MOHAMAD DARA SHUKOH with English Translation and Notes *by* Prof. C. Kunhan Raja. (Reprinted from the Adyar Library Bulletin, October, 1940, May and October, 1943) ... 0 12

### 1946

DHARMACAURYARASĀYANA OF GOPĀLAYOGĪNDRA—Edited *by* H. G. Narahari. (Reprinted from the Adyar Library Bulletin, October and December, 1946) ... 1 12

### 1948

SAṀSKṚTAGRANTHIVIGHAṬANA—*by* Prof. C. Kunhan Raja ... 0 8

CANDRAVĀKYAS OF VARARUCI—Edited *by* Prof. C. Kunhan Raja with Appendices ... 2 0

BHĀRATA-RĀṢṬRA-SAṄGHAṬANĀ (Indian Constitution in Sanskrit verses)—a sample—*by* Prof. C. Kunhan Raja ... 1 0

LANGUAGE PROBLEM IN INDIA—(Reprint from the Adyar Library Bulletin, Vol. XII, Part 4, December, 1948.) ... 1 0

SANSKRIT IN INDIA—*by* G. Srinivasa Murti. (Reprint from the Adyar Library Bulletin, Vol. XII, Part 3, October, 1948) ... 1 0

INFLUENCE OF INDIAN THOUGHT ON FRENCH LITERATURE—*by* Prof. Louis Renou. (Reprint from the Adyar Library Bulletin, Vols. XII and XIII) ... 0 12

| | Rs. | A. |
|---|---|---|
| **1949** | | |
| THE FUTURE ROLE OF SANSKRIT (Sanskrit Language)—*by* C. Kunhan Raja. (Reprint from the Adyar Library Bulletin, Vol. XIII, Part 1, February, 1949) ... | 0 | 12 |
| THE FUTURE ROLE OF SANSKRIT (Sanskrit Literature, Sanskrit Scholarship and Sanskrit Scholars) *by* Louis Renou and C. Kunhan Raja ... | 1 | 8 |
| DAS'AKUMĀRAKATHĀSĀRA OF APPAYĀMĀTYA—Edited *by* H. G. Narahari ... | 1 | 0 |
| BRAHMASŪTRABHĀṢYA-SIDDHĀNTASAṀGRAHA *by* S'rī Upaniṣad-brahmayogin—Edited by Pandit V. Krishnamacharya. (Reprint from the Adyar Library Bulletin, Vol. XIII, Parts 2 and 3) ... | 1 | 8 |
| INDIA'S CULTURAL ROLE IN THE WORLD *by* C. Kunhan Raja (Reprint from the Adyar Library Bulletin, Vol. XIII, Part 4) ... | 0 | 12 |
| **1950** | | |
| PĀDAVIDHĀNA OF S'AUNAKA with Bhāṣya—Edited *by* H. G. Narahari. (Reprint from the Adyar Library Bulletin, Vols. XIII and XIV) ... | 1 | 0 |
| HINDU RELIGION AND HINDU CUSTOMS—*by* C. Kunhan Raja. | 0 | 8 |

## IN THE PRESS

S'AIVA AND S'ĀKTA UPANIṢAḌS—Translated into English *by* T. R. Srinivasa Aiyangar and Edited *by* G. Srinivasa Murti.

YOGA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Edited *by* G. Srinivasa Murti. (Second Edition).

CATURDAS'ALAKSAṆĪ OF GADĀDHARA with three commentaries. Vol. II *by* Paṇḍit N. Santanam Aiyar.

ĀPASTAMBASMṚTI—Edited *by* A. N. Krishna Aiyangar.

SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, Vol III.

HORĀS'ĀSTRA—with the commentary Apūrvārthapradars'ikā *by* A. N. Srinivasaraghava Aiyangar.

SĀLISTAMBASŪTRA—Restored from Tibetan and Chinese Sources—*by* Paṇḍit N. Aiyaswami Sastri.

SAṀGĪTARATNĀKARA, English Translation—Vol. II, *by* Prof. C. Kunhan Raja.

DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* H. G. Narahari, Vol. V—Poetry, Drama and Poetics.

ARISTOTLE'S KATHARSIS AND BHARATA'S STHĀYIBHĀVAS *by* Prof. C. Kunhan Raja.

LANGUAGE—BARRIER OR BRIDGE *by* A. Sita Devi.

ṚGVEDABHĀṢYA OF SKANDASVĀMIN—Edited by Prof. C. Kunhan Raja.

VEDĀNTAKĀRIKĀVALĪ OF VENKAṬĀCĀRYA—Edited *by* Pandit V. Krishnamacharya with his own Commentary and Translation.

## READY FOR THE PRESS

ĀS'VALĀYANAGṚHYASŪTRA with the Commentaries of Devasvāmin and Nārāyaṇa. Vol. II. Edited *by* Svami Ravi Tirtha.

NYĀYAKUSUMĀÑJALI OF UDAYANA with the Commentary of Varadarāja. Edited *by* Prof. C. Kunhan Raja.

CATURDAS'ALAKṢAṆĪ OF GADĀDHARA—with Commentaries—Edited *by* Paṇḍit N. Santanam Aiyar, Vol. III.

PAKṢATĀ OF GADĀDHARA—with four commentaries Edited *by* Paṇḍit N. Santanam Aiyar.

SIDDHĀNTALAKṢAṆAM OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

AVAYAVA OF GADĀDHARA—with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

SĀMĀNYANIRUKTI OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

VYUTPATTIVĀDA OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

TEN MAJOR UPANIṢADS—English Translation *by* T. R. Srinivasa Aiyangar—Edited *by* G. Srinivasa Murti.

DESCRIPTIVE CATALOGUE OF SANSKRIT MSS. in the Adyar Library, *by* Pandit V. Krishnamacharya. Vol. IX—Mīmāṁsā and Advaita-Vedānta.

---

*Agents for our publications:*

**THE THEOSOPHICAL PUBLISHING HOUSE**

**Adyar, Madras 20**